# दत्तात्रेयोपनिषत्

## प्रथमः खण्डः

ॐ सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्नो ब्रूहि भगवन्नित्युक्तः सत्यानन्दचिदात्मकं सात्त्विकं मामकं धामोपास्स्वेत्याह। सदा दत्तो ऽहमस्मीति प्रत्येतत्संवदन्ति ये न ते संसारिणो भवन्ति। नारायणेनैवं विवक्षितो ब्रह्मा विश्वरूपधरं विष्णुं नारायणं दत्तात्रेयं ध्यात्वा सद्वदति॥ १॥

दमिति हंसः। दामिति दीर्घं तद्बीजं नाम बीजस्थम्। दामित्येकाक्षरं भवति। तदेतत्तारकं भवति। तदेवोपासितव्यं विज्ञेयं गर्भादितारणं। गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। वटबीजस्थमिव दत्तबीजस्थं सर्वं जगत्। एतदेवैकाक्षरं व्याख्यातम्॥ २॥

व्याख्यास्ये षडक्षरम्। ओमिति प्रथमम्। श्रीमिति द्वितीयम्। ह्रीमिति तृतीयम्। क्लीमिति चतुर्थम्। ग्लौमिति पञ्चमम्। द्रामिति षङ्क[ष्ठ]म्। षडक्षरो ऽयं भवति। सर्वसम्पद्वृद्धिकरी भवति । योगानुभवो भवति। गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता॥ ३॥

द्रमित्युक्त्वा द्रामित्युक्त्वा वा दत्तात्रेयाय नम इत्यष्टाक्षरः। दत्तात्रेयायेति सत्यानन्दचिदात्मकम्। नम इति पूर्णानन्दैकविग्रहम्। गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। दत्तात्रेयायेति कीलकम्। तदेव बीजम्। नमः शक्तिर्भवति॥ ४॥

ओमिति प्रथमम्। आमिति द्वितीयम्। ह्रीमिति तृतीयम्। क्रोमिति चतुर्थम्। एहीति तदेव वदेत्। दत्तात्रेयेति स्वाहेति मन्त्रराजो ऽयं द्वादशाक्षरः। जगती छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ओमिति बीजम्। स्वाहेति शक्तिः। सम्बुद्धिरिति कीलकम्। द्रमिति हृदये। ह्रीं क्लीमिति शीर्षे। एहीति शिखायाम्। दत्तेति कवचे। आत्रेयेति चक्षुषि। स्वाहेत्यस्त्रे। तन्मयो भवति। य एवं वेद॥ ५॥

षोडशाक्षरं व्याख्यास्ये। प्राणं देयम्। मानं देयम्। चक्षुर्देयम्।

श्रोत्रं देयम्। षड्दशशिरश्छिनत्ति। षोडशाक्षरमन्त्रो न देयो भवति। अतिसेवापरभक्तगुणवच्छिष्याय वदेत्। ओमिति प्रथमं भवति। ऐमिति द्वितीयम्। क्रोमिति तृतीयम्। क्लीमिति चतुर्थम्। क्लूमिति पञ्चमम्। ह्रामिति षष्ठम्। ह्रीमिति सप्तमम्। ह्रूमित्यष्टमम्। सौरिति नवमम्। दत्तात्रेयायेति चतुर्दशम्। स्वाहेति षोडशम्। गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ॐ बीजम् । स्वाहा शक्तिः। चतुर्थ्यन्तं कीलकम्। ओमिति हृदये। क्लीं क्लीं क्लूमिति शिखायाम्। सौरिति कवचे। चतुर्थ्यन्तं चक्षुषि। स्वाहेत्यस्त्रे। यो नित्यमधीयानः सच्चिदानन्दसुखी मोक्षी भवति । सौरित्यन्ते श्रीवैष्णव इत्युच्यते। तज्जापी विष्णुरूपीभवति॥ ६॥

अनुष्टुप्छन्दो व्याख्यास्ये। सर्वत्र सम्बुद्धिरिमानीत्युच्यन्ते।

दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक।
दिगम्बर मुने बाल पिशाच ज्ञानसागर॥

इत्युपनिषत्। अनुष्टुप्छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। दत्तात्रेयेति हृदये । हरे कृष्णेति शिर्षे। उन्मत्तानन्देति शिखायाम्। दायक मुन इति कवचे। दिगम्बरेति चक्षुषि। पिशाच ज्ञानसागरेत्यस्त्रे। आनुष्टुभो ऽयं मयाधीतः। अब्रह्मजन्मदोषाश्च प्रणश्यन्ति। सर्वोपकारी मोक्षी भवति। य एवं वेदेत्युपनिषत्॥ ७॥

इति पूर्वः [प्रथमः] खण्डः

द्वितीयः खण्डः

ओमिति व्याहरेत्। ॐ नमो भगवते दत्तात्रेयाय स्मरणमात्रसन्तुष्टाय महाभयनिवारणाय महाज्ञानप्रदाय चिदानन्दात्मने बालोन्मत्त-पिशाचवेषायेति महायोगिने ऽवधूतायेति अनसूयानन्दवर्धनायात्रिपुत्रायेति सर्वकामफलप्रदाय ओमिति व्याहरेत्। भवबन्धमोचनायेति

ह्रीमिति व्याहरेत्। सकलविभूतिदायेति क्रोमिति व्याहरेत्। साध्याकर्षणायेति सौरिति व्याहरेत्। सर्वमनःक्षोभणायेति श्रीमिति व्याहरेत्। महोमिति व्याहरेत्। चिरञ्जीविने वषडिति व्याहरेत्। वशीकुरु वशीकुरु वौषडिति व्याहरेत्। आकर्षयाकर्षय हुमिति व्याहरेत्। विद्वेषय विद्वेषय फडिति व्याहरेत्। उच्चाटयोच्चाटय ठ ठेति व्याहरेत्। स्तम्भय स्तम्भय ख खेति व्याहरेत्। मारय मारय नमः सम्पन्नाय नमः सम्पन्नाय स्वाहा पोषय पोषय परमन्त्रपरयन्त्रपरतन्त्रांश्छिन्धि छिन्दि ग्रहान्निवारय निवारय व्याधीन्निवारय निवारय दुःखं हरय हरय दारिद्र्यं विद्रावय विद्रावय देहं पोषय पोषय चित्तं तोषय तोषय सर्वमन्त्रसर्वयन्त्रसर्वतन्त्रसर्वपल्लवस्वरूपायेति ॐ नमः शिवायेत्युपनिषत्॥

इति द्वितीयः खण्डः

तृतीयः खण्डः

य एवं वेद। अनुष्टुप्छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ओमिति बीजम्। स्वाहेति शक्तिः। द्रामिति कीलकम्। अष्टमूर्त्यष्टमन्त्रा भवन्ति। यो नित्यमधीते वाय्वग्निसोमादित्यब्रह्मविष्णुरुद्रैः पूतो भवति। गायत्र्याः शतसहस्रं जप्तो भवति। महारुद्रशतसहस्रजापी भवति। प्रणवायुतकोटिजप्तो भवति। शतपूर्वाञ्शतापरान्पुनाति। स पङ्क्तिपावनो भवति। ब्रह्महत्यादिपातकैर्मुक्तो भवति। गोहत्यादिपातकैर्मुक्तो भवति। तुलापुरुषादिदानैः प्रपापानतः पूतो भवति। अशेषपापान्मुक्तो भवति। अभक्ष्यभक्ष्यपापैर्मुक्तो भवति। सर्वमन्त्रयोगपारीणो भवति। स एव ब्राह्मणो भवति । तस्माच्छिष्यं भक्तं प्रतिगृह्णीयात्। सो ऽनन्तफलमश्नुते। स जीवन्मुक्तो भवतीत्याह भगवान्नारायणो ब्रह्माणमित्युपनिषत्॥

इति तृतीयः खण्डः